# दशकुमारचरितम् ।

महाकवि-श्रीदण्डाचार्य्यप्रणीतम् ।



वि, ए, उपाधिधारिणा

पण्डितकुलपतिना

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया समुल्लासितम् ।

तदात्मजाभ्यां

पण्डित-श्रीआशुबोध-विद्याभूषण-

पण्डित-श्रीनित्यबोध-विद्यारत्नाभ्यां

टीकया परिवर्द्धितं संस्कृतं प्रकाशितञ्च ।

षष्ठसंस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितम् ।

इं १९२५ ।



# दशकुमारचरितस्य सङ्क्षिप्तकथायां

## पूर्वपीठिका ।

## अथ प्रथमोच्छ्वासः ।

प्रणम्य परमात्मानं श्रीजीवानन्दशर्मणा ।
कथा दशकुमारस्य सङ्क्षेपात् लिख्यते मया ॥

अस्ति मगधो नाम महान् जनपदः। तत्र आसीत् पुष्पपुरी नाम्नी नगरी। राजहंसो नाम महाप्रतापः तस्यां राजा बभूव। तस्य वसुमतीनाम्नी महादेवी, परमविधेया धर्मपाल-पद्मोद्भव-सितवर्मनामधेयाः त्रयोऽमात्याश्च आसन्। तेषाञ्च धर्मपालस्य सुमन्त्रसुमित्रकामपालाः, पद्मोद्भवस्य सुश्रुतरत्नोद्भवौ, सितवर्मणः सुमतिसत्यवर्माणौ इति सूनवः समभवन्। तेषु धर्मशीलः सत्यवर्मा संसारस्य असारतां बुद्ध्वा तीर्थयात्रार्थं देशान्तरम् अगमत्। कामपालः वारनारीपरो दुर्विनीतः पितुः अग्रजस्य च शासनम् अतिक्रम्य भुवं बभ्राम। रत्नोद्भवः वाणिज्यार्थं समुद्रपारगमनम् अकार्षीत्। अपरे सुमन्त्रसुमित्रसुश्रुतसुमतयः पितृषु सुरलोकमितेषु यथापूर्वम् अन्वतिष्ठन्।

एकदा मगधाधिपतिः मालवेन्द्रं मानसारं जिगीषुः महता बलसमुदायेन सङ्ग्रामभूमिम् अवातरत्। सोऽपि चतुरङ्गबलोद्रिक्तः सविग्रहो दर्प इव तम् अभिजगाम। तयोश्च शस्त्राशस्त्रि हस्ताहस्ति परस्पराभिहतसैन्यं महत् जन्यमजनि, जितश्च मालवनाथो मगधनाथेन। अथ त्रपाक्रान्तचेताः मगधेश्वरो मालवेन्द्रं प्रक्षीणसकलसैन्यं पुनः

स्वराज्ये स्थापयामास। ततः स राजा राजहंसो विजय-प्रफुल्लमनाः स्वराजधानीं प्रत्येत्य अनन्यशासनां धरां शासदपि केवलम् अनपत्यतया जातदैन्यः सकललोकैकशरणं नारायणम् अजस्रम् आराधयामास।

अथ तदग्रमहिषी वसुमती प्रत्यूषसि सुस्वप्नम् अवलोकित-वती। ततः देवानुग्रहेण दयितमनोरथपुष्पभूतं गर्भम् अधत्त। राजाऽपि तद्विदित्वा सानन्दः समाहूतनिखिलबन्धुवर्गः निजो-त्साहसम्पदनुरूपं सीमन्तोन्नयनादिकं महोत्सवम् अन्वतिष्ठत्। कदाचित् सभासीनो नृपः सन्न्यासिनम् एकम् आगतम् अभाषत,—"ननु तापस! देशं सापदेशं भ्रमन् किमपि क्वचित् अवगत-श्चेत् कथयतु भवान्" इति। तेन कृताञ्जलिना अभाषि,—"देव! देवस्य आज्ञां शिरसि धृत्वा अनेन अनाशङ्कनीयेन वेशेन महीं चरन् मालवदेशम् अनुप्रविश्य तत्र सुगूढं तिष्ठन् तस्य राज्ञः समस्तम् उदन्तम् उपलभ्य प्रत्यागमम्। मानी मान-सारः सङ्ग्रामे भवतः पराजयम् अवाप्य नितराम् अव-मानितः सुदीनमना महाकालनिवासिनं महाकालम् आराध्य तपःसन्तुष्टात् तस्मात् एकवीरारातिघातिनीं महा-गदां प्राप्य कृतार्थम्मन्यः साम्प्रतं भवन्तम् अभियोक्तुम् उद्-यच्छतीति श्रुत्वा देवः प्रमाणम्" इति। तदाकर्ण्य अमात्या ऊचुः,—"देव! यत् अयमरातिः अप्रतिविधेयेन दैवबलेन योद्धुम् आयाति तदस्माकम् अनेन योद्धुमसाम्प्रतम्।" एवं बहु विज्ञापितोऽपि तैः नरपतिः महता गर्वेण परीतः तेषां वचनम् अनादृत्य प्रतियोद्धुमना आसीत्। महेश्वरदत्तबलो मानसारः समस्तसाधनसमेतो मगधदेशं प्राविशत्। अत्रान्तरे मन्त्रिणो राजानं राजहंसं कथञ्चित् अनुनीय तदीयावरोधान् रिपुदुर्गमे विन्ध्याटवीमध्ये मूलरक्षितान् न्यवेशयन्।

अथ राजा महाबलसामग्रीसमेतः सङ्ग्रामभूमिम् अवातरत्, अवारुणच्च महान्तम् अरातिं मालवराजम्। महति सम्प्रहारे चलति मालवराजो महतीं तां गदां मगधेश्वराय प्राहिणोत्। सा तु निशितशरशतेन शकलीकृताऽपि अन्तरा दैवशक्तेः अप्रतिविधेयतया सूतं निहत्य राजानं राजहंसं रथस्थमेव मूर्च्छितम् अकरोत्। ततो वीतप्रग्रहा अक्षतविग्रहाश्च वाहा दैवगत्या रथम् आदाय अन्तःपुरशरण्यं महारण्यं प्राविशन्। तत्र अमात्याः कथञ्चित् अक्षतशरीराः समागत्य राजानम् अनवलोक्य दैन्यपरीता देवीम् अवापुः। सा च तेभ्यो निखिलसैन्यक्षतिं राज्ञोऽदृश्यत्वञ्च आकर्ण्य शोकार्णवनिमग्ना राजानं गतजीवितं मन्यमाना तदनुसरणे मतिम् अकरोत्। अथ अमात्यपुरोहिताः समेत्य तां,— "कल्याणि! देवस्य निधनम् अनिश्चितम्, अन्यच्च, दैवज्ञेन कथितं, भवत्या उदरे सार्वभौमः कुमारो वसतीति। तदिदानीं तव मरणाय समुद्योगो न युक्तः" इति प्रबोध्य कथञ्चित् समसान्त्वयन्।

अथ अर्द्धरात्रे निसुप्तनिखिलपरिजने सा महिषी शोकार्णवम् अपारमुत्तर्त्तुमशक्नुवती सेनानिवेशं शनैः अतिक्रम्य यस्मिन् रथस्य संसक्ततया तदानयनपलायनपरिश्रान्ता गन्तुम् अक्षमाः क्षमापतिरथ्याः समाकुलाः समतिष्ठन्, तस्य निकटे वटतरुशाखायाम् उत्तरीयार्द्धेन बन्धनं विरच्य मर्त्तुकामा साश्रुकण्ठा व्यलपत्। तदाकर्ण्य तत्रस्थो मगधपतिः अवशेन्द्रियः कथञ्चित् अनुत्क्रान्तजीवितः लब्धचेतन्यः तत् विलपितं देवीवाक्यमेव निश्चिन्वानः शनकैः ताम् आह्वयत। सा तु तद्वचनं स्वरेण भर्त्तृवाक्यमेव मन्यमाना ससम्भ्रमम् आगत्य प्रफुल्लवदना तं नेत्राभ्यां

पिबन्तीव विकस्वरेण स्वरेण पुरोहितामात्यादिकं समाहूय तेभ्यः तम् अदर्शयत्। ते ऊचुः,—"देव! वाहाः सारथ्यपगमे रथं रभसादरण्यमनयन्निति दृष्टमस्माभिः।" ततो राजा अब्रवीत्,—"तत्र निहतसैनिकग्रामे सङ्ग्रामे मालवराजेन प्रहितया गदया ताड़ितोऽहं मूर्च्छाम् एत्य अत्र वने वाहैः आनीतो निशीथपवनेन लब्धसंज्ञोऽस्मि" इति। ततो मन्त्रि-पुरोहितादयः तं शिविरम् आनीय अपनीताशेषशल्यं विरोपितव्रणम् अकार्षुः। प्रियभाषिण्या राज्ञ्या वसुमत्या असौ सुदीनान्तरात्मा महीपतिः विविधप्रबोधवचनैः समाश्वासि।

अथ कियता कालेन समाश्वस्तचित्तो राजा सकल-सैन्यसामन्तसमवेतः महातापसं वामदेवं समाजगाम। तेन च कृतातिथ्यो राजा तदाश्रमे कियन्तं कालमुषित्वा तं समाराधयन् समवोचत,—"भगवन्! मानसारः प्रबलेन दैव-सहायेन मां निर्जित्य मद्राज्यं भुङ्क्ते। अहमपि उग्रं तपो विरचय्य तद्बलेन तम् अरातिम् उन्मूलयितुम् इच्छन् भवन्तं शरणं गतः" इति। ततो मुनिः अभाषत,—"राजन्! तपसा अतिक्लेशकारिणा अलम्। तव अग्रमहिषीगर्भस्थितो राजकुमार एव तव मनोरथं सम्पादयिष्यति। कञ्चन कालमपेक्षस्व" इति। तदानीञ्च गगनचारिण्या वाचा तदेव अनुमोदितम्। राजा तदेव वचनम् अनुसरन् तत्र कालं प्रतीक्षाञ्चक्रे।

अथ कालेन प्राप्तप्रसवकाला वसुमती शुभे मुहूर्त्ते सर्वलक्षणलक्षितं सुतमसूत। राजा महानन्दपरीतः कृत्य-वित् तेन मुनिना जातसंस्कारं कुमारं राजवाहननामानम् अकरोत्। एतस्मिन्नेव काले सुमतिसुमन्त्रसुमित्रसुश्रुतानां

मन्त्रिणां प्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुताख्याश्चत्वारः सूनवः समजायन्त। राजवाहनः तैः मन्त्रिपुत्रैः आत्मबिम्बैरिव सह बालकेलिम् अनुभवन् अवर्द्धत।

---

## उपहारवर्मोत्पत्तिकथा।

कदाचित् कश्चित् तापसः कमपि सुलक्षणं कुमारं राज्ञे राजहंसाय समर्प्य अवोचत्,—"नृपते! कुशसमिदाहरणार्थिना मया वनमध्ये काचिदनाथा रुदती नारी अवलोकिता। "निर्जनेऽस्मिन् अरण्ये किमिति रुद्यते?" इति पृष्टा सा अश्रूणि प्रमृज्य सगद्गदम् अवादीत्,—"भगवन्! मिथिलेश्वरे प्रहारवर्मणि निजसुहृदो मगधनाथस्य सीमन्तिनीसीमन्तमहोत्सवाय सपुत्रदारे पुष्पपुरीमेत्य कञ्चन कालम् अधिवसति मालवाधीश्वरो मानसारो मगधम् आचक्राम। तत्र महति सम्पराये सुहृदो राजहंसस्य साहाय्याय रणभूमिम् अवतीर्णो मिथिलेश्वरो रिपुणा मालवराजेन निर्जित्य कारुण्येन विसृष्टो हतावशिष्टेन सैन्येन सह स्वपुरं गच्छन् वनभूमौ अधिकबलेन शवरसैन्येन रभसात् आक्रम्यमाणो मूलबलरक्षितान्तःपुरः पलायिष्ट। यमजयोः तदीयार्भकयोः धात्रीभावेन परिकल्पिताऽहं मद्दुहिता च द्रुतगतिं नृपतिम् अनुगन्तुम् अक्षमे अभूव। तत्र व्यात्ताननः कोऽपि व्याघ्रः शीघ्रं माम् अन्वधावत्। भयस्खलिताऽहं पाषाणोपरि पर्य्यपतम्। मत्पाणिस्खलितः शिशुः प्रभ्रष्टः कस्यापि गोशवस्य क्रोड़म् अभ्यलीयत। तच्छवम् आकर्षतस्तस्य शार्दूलस्य प्राणान् कोऽपि शवरः शरेण अपाहरत्। स च बालः शवरैः क्वापि अनीयत। अपरं राजकुमारम् उद्वहन्तो मम सुता

क्व गतेति न जानामि। साऽहं मोहं गता केनापि कृपालुना गोपालेन स्वकुटीरं नीत्वा विरोपितव्रणा अभवम्। ततः स्वस्थीभूय भूयः स्वामिभर्त्तुः अन्तिकम् उपजिगमिषुः असहायतया दुहितुः अनभिज्ञतया च व्याकुलीभवामि" इति अभिदधाना "एकाकिन्यपि स्वामिनं गमिष्यामि" इति कृतमतिरगात्। अहमपि भवन्मित्रस्य मिथिलेश्वरस्य दुरवस्थाम् अनुस्मरन् तदीयं कुमारम् अन्विष्यन् एकं चण्डिकामन्दिरम् अगच्छम्। तत्र गत्वा एनं कुमारं शबरैः अनेकधा हन्यमानम् आलोक्य जातदयस्तान् अभ्यधां,—"ननु भद्राः! अस्मिन् घोरे कान्तारे भ्रष्टपथः स्थविरोऽहं ब्राह्मणः, मम पुत्रकं क्वचित् तरुच्छायायां रक्षित्वा मार्गान्वेषणाय किञ्चित् अन्तरम् अगमम्। प्रत्यागत्य स कुत्र गतः केन वा गृहीतः इति नावधारयितुं शक्नुवन् युष्मदन्तिकमायातोऽस्मि, यदि युष्माकं दर्शनपथं गतोऽसौ" इति। एवमुक्ते ते,—"ब्रह्मन्! अयमेकः शिशुः अस्माभिः अधिगतः, यदि सत्यमेव तव आत्मजो भवेत् तदा गृहाण" इत्युक्त्वा मह्यमदुः। अथ अहं तेभ्यो दत्ताशीर्बालकम् एनमादाय शिशिरोपचारादिना समाश्वास्य निःशङ्कं भवदन्तिकम् आनीतवान् अस्मि। भवानिदानीमस्य पितृस्थानीयः परिपालयतु तावत् आयुष्मन्तम्।" राजा सुहृदापन्निमित्तं शोकं तदीयकुमारसुखावलोकनसुखेन किञ्चित् सङ्कोच्य तम् उपहारवर्मनाम्ना आहूय स्वपुत्रनिर्विशेषम् अपुषत्।

---

## अपहारवर्मोत्पत्तिकथा।

एकदा राजा तीर्थस्नानाय गच्छन् किरातपल्लीमार्गे कयाचित् उपलालितमेकं सुकुमारं कुमारम् अवलोक्य

ताम् अवादीत्,—"भद्रे! कोऽयं बालः? कस्य वा नयनानन्दः? केन वा निमित्तेन दीन इव लक्ष्यते?"। तया सप्रणामम् अभिहितं,—"महात्मन्! अस्मिन् मार्गे गच्छतः शक्रतेजसो मिथिलेश्वरस्य सर्वस्वम् अपहरति शबरसैन्ये मत्पतिना अपहृत्य बालोऽयं मह्यम् अर्पितः; मया च सयत्नं लाल्यते।" राजा तदाकर्ण्य मुनिकथितं द्वितीयं राजकुमारम् एनं निश्चित्य, सामदानाभ्यां तां शबरीं सन्तोष्य अपहारवर्मनामानं कृत्वा देव्यै समर्पयामास।

---

## पुष्पोद्भवोत्पत्तिकथा।

कदाचित् वामदेवान्तेवासी सोमदेवशर्मा नाम कमपि बालं राज्ञः पुरतो नीत्वा अब्रवीत्,—"देव! रामतीर्थे स्नात्वा समागच्छता मया वनभूमौ कयाऽपि वनितया लाल्यमानमेनं समुज्ज्वलरूपं कुमारम् अवलोक्य सा अभाणि,—"भद्रे! का त्वम्? को वाऽसौ शिशुस्त्वया आयासेन लाल्यते?" इति। सा अब्रवीत्,—"भगवन्! कालयवनद्वीपे कालगुप्तो नाम कश्चित् महाधनो वैश्यवरोऽस्ति। एतस्मात् द्वीपात् गतो मगधराजमन्त्रिसुतो रत्नोद्भवो नाम तदीयां कन्यां सुवृत्तां नाम उपयम्य श्वशुरेण समाहूतः तत्रैव तस्थौ। कालेन सा सुवृत्ता गर्भिणी जाता। ततः सहोदरदर्शनार्थी रत्नोद्भवः श्वशुरम् अनुनीय अनया भार्य्यया सुवृत्तया सह प्रवहणम् आरुह्य पुष्पपुराभिमुखः प्रतस्थे। दुर्दैवगत्या तत् प्रवहणं समुद्राम्भसि न्यमज्जत्। अहन्तु अस्या धात्रीभावेन परिकल्पिता तस्मिन्नेव प्रवहणे स्थिता कराभ्यां तां सुवृत्ताम् उद्वहन्ती फलकमेकम् अवलम्ब्य कथमपि तीरभूमिम् आसादयम्। रत्नोद्भवस्य गतिर्न मया

विदिता। क्लेशस्य परां काष्ठां गता सुवृत्ता अस्मिन् अटवीमध्ये सुतमसूत। मार्गम् अन्वेष्टुकामाऽहं प्रसववेदनया विवशायास्तस्याः समीपे बालकं निक्षिप्य गन्तुम् अयुक्तमिति तं शिशुम् अनयम्” इति। अत्रान्तरे कश्चित् वन्यो वारणः प्रत्यदृश्यत ; तम् आलोक्य सा भीता तं बालकं निपात्य प्राद्रवत्। अहमपि सन्निहितलतागुल्मम् आसाद्य परीक्षमाणः स्थितः। अथ निपतितं बालकं पल्लवकवलमिव आददति गजराजे कश्चित् सिंहः समभ्यधावत्। तदवलोक्य भयाकुलेन गजेन झटिति वियति समुत्पात्यमानो बालको न्यपतत्। दीर्घायुष्यतया असौ केनचित् वानरेण पक्वफलबुद्ध्या परिगृहीतः पुनः फलेतरदृष्ट्या विततरुस्कन्धमूले निक्षिप्तोऽभूत्। स च केशरी गजपतिं निहत्य प्रतस्थे। वानरोऽपि क्वापि गतः। अहन्तु तस्मात् लतागुल्माभ्यन्तरात् निर्गत्य बालकम् एनम् अवनिरुहस्कन्धात् अवतार्य्य वनान्तरे तां वनिताम् अप्राप्य गुरवे निवेद्य तदादेशेन भवदन्तिकम् अनयम्।” राजा तु तदाकर्ण्य रत्नोद्भवः कथम् अभवदिति चिन्तयन् तन्नन्दनं पुष्पोद्भवनामानं कृत्वा तद्वृत्तान्तं सुश्रुताय व्याख्याय विषादसन्तोषौ अनुभावयन् तदनुजतनयं समर्पितवान्।

---

## अर्थपालोत्पत्तिकथा।

एकदा कमपि बालकमुत्सङ्गे धृतं वसुमत्या दृष्ट्वा राजा अब्रवीत्,—“देवि! कुतोऽसौ कथं लब्धः?” इति। सा प्रोवाच,—“नाथ! अतीतायां रजन्यां काचन दिव्याङ्गना मत्पुरतः कुमारमेनं समर्प्य निद्रितां मां विबोध्य सविनयम् अब्रवीत्,—‘देवि! त्वन्मन्त्रिणो धर्मपालनन्दनस्य कामपालस्य वल्लभाऽहं

यक्षकन्या तारावली नाम नन्दिनी मणिभद्रस्य। धनपतेः आदेशेन मदात्मजमेनं तव तनयस्य भाविचक्रवर्त्तिनः राजवाहनस्य परिचर्य्याकरणार्थम् आनीतवती अस्मि। त्वमेनं संवर्द्धय" इति। मया च विस्मितया सत्कृताऽसौ यक्षी तदैवान्तर्हिताऽऽसीत्" इति। राजा तदाकर्ण्य सविस्मयं सुमित्रं मन्त्रिणम् आहूय तदीयभ्रातृपुत्त्रम् अर्थपालं नाम कृत्वा सर्वं वृत्तान्तं तस्मै समाख्याय प्रादात्।

—

## सोमदत्तोत्पत्तिकथा।

अन्येद्युः वामदेवशिष्यः कमपि शिशुम् आनीय राजानम् अब्रवीत्,—"देव! तीर्थयात्राप्रसङ्गेन कावेरीतीरं गतोऽहं बालकमेनम् उत्सङ्गे कृत्वा रुदतीं कामपि स्थविराम् आलोक्य अवोचं,—"स्थविरे! का त्वम्? कथं वा रोदिषि? बालकश्च कस्य नेत्रानन्दकरः?" इति। सा करयुगेन वाष्पं प्रमृज्य अब्रवीत्,—"ब्रह्मन्! राजहंसामात्यस्य सितवर्मणः कनीयान् सुतः सत्यवर्मा तीर्थयात्राप्रसङ्गेन देशम् इमम् आगतः। स कुत्रचित् ग्रामे कालीं नाम कामपि विप्रतनयाम् उपयम्य तस्या अनपत्यतया तत्कनीयसीं भगिनीं गौरीं नाम परिणीय तस्याम् एनं तनयम् अलभत। काली तु सासूयं धात्रा मया सह बालकं केनचित् मिषेण आनीय अस्यामेव तटिन्याम् अक्षिपत्। अहन्तु करेण एकेन बालकम् उद्धृत्य अपरेण अम्भसि प्लवमाना नदीवेगागतस्य कस्यचित् तरोः शाखाम् आलम्ब्य तत्र शिशुं निधाय नदीवेगेन उह्यमाना तत्तरु-स्थितेन कालसर्पेण दष्टाऽस्मि। मदाश्रयभूतोऽयं तरुर्दैवगत्या अस्मिन् देशे तीरम् अलगत्। विषस्य सुतीक्ष्णतया

मयि मृतायाम् अरण्ये कश्चन शरण्यो नास्तीति मया रुद्यते” इति।

ततो विषमविषज्वालया सा वराकी धरणीतले न्यपतत्। सञ्जातदयोऽहं मन्त्रबलेन विषज्वालाम् अपनेतुम् अक्षमतया सन्निहितकानने औषधिविशेषम् अन्विष्य प्रत्यागच्छन् मृतां ताम् आलोकयम्। तदनु अग्निसंस्कारं विधाय व्याकुलचेता बालमेनम् अगतिमादाय भवदमात्यनन्दनस्य भवानेव रक्षितेति भवदन्तिकम् आनीतवानस्मि।”

तदाकर्ण्य राजा सत्यवर्मचिन्तया खिन्नमनाः सुमतये मन्त्रिणे सोमदत्तं नाम तदनुजतनयं समर्पितवान्। सोऽपि सोदरमिव तं मन्यमानो विशेषेण अपुषत्।

---

इत्थं मिलितेन कुमारवर्गेण सह बालकेलिम् अनुभवन् राजवाहनः क्रमेण चूड़ोपनयनादिकं संस्कारम् अवाप। ततः सकललिपिषु सकलदेशभाषासु षड़ङ्गसहितवेदेषु काव्यनाटकाख्यानादिषु धर्मशास्त्रज्योतिषतर्कमीमांसादिषु शस्त्रविद्यासु नीतिशास्त्रेषु कलासु मणिमन्त्रौषधादिप्रयोगेषु हस्तितुरगादिविद्यासु अन्येषु च विविधेषु वैषयिकव्यापारेषु तत्तदाचार्य्येभ्यः सम्यक् वैचक्षण्यं समासाद्य यौवनेन विलसन्तम् अनलसं कुमारनिचयं वीक्ष्य राजा साम्प्रतं शत्रुदुर्द्धर्षोऽहं जात इति मन्यमानः परमानन्दम् अविन्दत।

इति प्रथमोच्छ्वासः।

---

## अथ द्वितीयोच्छ्वासः।

एकदा वामदेवः राजानं कुमारनिचयञ्च प्रणतशिरसं

गाढमालिङ्ग्य विहिताशीर्मधुरया वाचा प्रावोचत्,—"राजन्! राजपुत्त्रो राजवाहनः साम्प्रतं सम्पूर्णलावण्यं तारुण्यम् अनुभवति। ससहचरस्य अस्य दिग्विजयाय अयं कालः। तदस्य विजयप्रस्थानमङ्गलम् आचरतु भवान्" इति। कुमाराश्च सर्वे तद्वाक्यम् अभिननन्दुः। ततः स राजा तत्साचिव्यमितरेषां विधाय समुचितम् उपदिश्य शुभे मुहूर्त्ते सपरिजनं कुमारं विससर्ज। राजवाहनः पित्रा कृताशीः शुभशकुनं विलोकयन् कांश्चित् देशान् अतिक्रम्य विन्ध्याटवीम् अविशत्, अपश्यच्च तत्र हेतिहतिकिणाङ्कं कालायसकर्कशकायं यज्ञोपवीतमात्रानुमितविप्रभावं प्रकटितकिरातभावं दुर्दर्शं कमपि पुरुषम्। तेन च कृतातिथ्यः स राजतनयः समभ्यधात्,—"ननु निर्जने घोरेऽस्मिन् कान्तारे किमिति एकाकी भवान् निवसति? भवत्कण्ठस्थितमेतत् यज्ञोपवीतं विप्रभावम् अवगमयति, हेतिहतिभिश्च किरातभावम्। तत् कथय को भवान्? कथमिदम्?" इति। स पुमान् राजवाहनं महानुभावप्रकृतिं महापुरुषं मन्यमानः तद्वयस्येभ्यस्तन्नामजनने च विदित्वा सविनयम् अवादीत्,—"राजकुमार! अत्र अटव्यां केचित् स्वाचारं हित्वा पुलिन्दानुचराः तदन्नभोजिनो बहवो ब्राह्मणब्रुवाः प्रतिवसन्ति। तेषां कस्यापि पुत्त्रो दुश्चरितमात्रपरः मातङ्गो नामाऽस्मि। स च अहं किरातबलेन विचरन् ग्रामं नगरञ्च प्रविश्य तत्रत्यान् धनिनः सदारपुत्त्रान् बधबन्धनादिना निर्जित्य तेषां सर्वस्वानि अपहरन् निर्दयं व्यचरम्।

कदाचित् क्वचित् विपिने मत्सहचरगणैः जिघांस्यमानं कञ्चित् द्विजम् आलोक्य सहसा सञ्जातदयोऽहमब्रवं,—"ननु पापाः! न हन्तव्यो ब्राह्मणः" इति। ते मां सक्रोधा निरभर्त्सयन्। अहं तेषां निर्भर्त्सनम् असहमानस्तस्य ब्राह्मणस्य

रक्षणार्थं चिरं प्रयुध्य तैः निहतोऽभवम्। ततश्च यमपुरीमेत्य सभामण्डपे रत्नसिंहासनस्थं प्रेतपतिं दृष्ट्वा प्राणमम्। सोऽपि माम् अवेक्ष्य चित्रगुप्तम् अब्रवीत्,—"मन्त्रिन्! पश्य, अयमस्य न मृत्युसमयः। अयञ्च निन्दितचरित्रोऽपि द्विजरक्षार्थं मृतः। इतः परमस्य निष्पापस्य पुण्यार्जने मतिरुदेष्यति। तदयं पापिभिः अनुभूयमानां यातनां विलोक्य पुनः पूर्वशरीरं लभताम्" इति। चित्रगुप्तोऽपि तत्र तत्र निरयवासिनां दुर्गतीः दर्शयित्वा सुबुद्धिम् उपदिश्य माम् अमुञ्चत्। ततः तदेव पूर्वशरीरम् अवाप्य तेनैव विप्रेण परिरक्ष्यमाणः क्षणम् अतिष्ठम्। अथ असौ द्विजः कृतज्ञः मह्यं विविधविद्यां शिक्षयित्वा सदाचारम् उपदिश्य शिवपूजायां मां निवेश्य प्रायात्। ततः प्रभृति किरातसम्बन्धम् उत्सृज्य देवं शङ्करं मनसा स्मरन् अत्रैव निवसामि।

राजपुत्र! भवते किञ्चित् विज्ञापनीयं रहस्यम् अस्ति, तत् आगम्यताम्" इत्युक्त्वा स मातङ्गः वयस्यगणात् अपेतं तं रहसि समभाषत,—"नृपनन्दन! अतीते निशान्ते गौरीपतिः स्वप्न-सन्निहितः निद्रालोढ़लोचनं मां विबोध्य अब्रवीत्,—"मातङ्ग! दण्डकारण्यमध्यवर्त्तिन्याः तटिन्याः तीरदेशे सिद्धसाध्याराध्यस्य स्फटिकलिङ्गस्य पश्चात् पार्वतीपदपङ्क्तिचिह्नितस्य अश्मनः सविधे विधेः आननमिव किमपि विलं वर्त्तते। तत् प्रविश्य तत्र निक्षिप्तं ताम्रशासनं शासनमिव विधातुः समादाय तदुपदिष्टं विधिं विधाय त्वया पातालाधीश्वरेण भाव्यम्। भवत्साहाय्यकारी राजकुमारः अद्य श्वो वा समागमिष्यति" इति। तदादेशानुगुणमेव भवदागमनं, तत् साहाय्यार्थिनी मम कुरु साहाय्यम्" इति।

अथ राजवाहनः तथेति प्रतिज्ञाय तान् सहचरान्

प्रसुप्तान् निशीथे विहाय तेन मातङ्गेन चचाल। ते च कुमाराः प्रातः समुत्थाय राजपुत्त्रम् अनवलोकयन्तः विषण्ण-चेतसः अन्विष्यन्तः समन्तात् यदा न प्रापुस्तदा निश्चितपुनः-सङ्गमसङ्केताः परस्परं वियुज्य ययुः। मातङ्गोऽपि तेन लोक-वीरेण रक्ष्यमाणः महेश्वरनिर्दिष्टं बिलं निर्भयं प्रविश्य गृहीत-ताम्रशासनः रसातलं गत्वा शासनविधिना होमं विरच्य तस्मिन्नेव ज्वलदग्नौ समन्त्रं स्वदेहम् आहुतीकृत्य दिव्यां तनुम् अवाप।

अथ काचन सर्वावयवसम्पन्ना सर्वालङ्कारालङ्कृता कन्यका समागत्य मणिमेकं समुज्ज्वलम् उपायनीकृत्य उदञ्जलिस्तम् अभाषत,—"विप्रवर्य्य! अहम् असुरराजनन्दिनी कालिन्दी नाम, मम पिता अस्य लोकस्य शासिता भगवता विष्णुना समरे निहतः। मान्तु पितृशोकसागरपतिताम् आलोक्य कश्चित् सिद्धतापसः सदयम् अवादीत्,—"वत्से! कश्चिन्मानवो दिव्य-देहधारी तव वल्लभो भूत्वा पातालं पालयिष्यति" इति। तदादेशात् चातकीव घनागमनं तवागमनं प्रतीक्षमाणा अतिष्ठम्। अद्य मम सुप्रभातं, येन त्वं मयाऽद्य प्राप्तः; तदिदानीं मां परिगृह्य रसातललक्ष्मीम् अनुभव" इति। मातङ्गोऽपि राजपुत्त्रानुमत्या तां तरुणीं परिणीय रसातलसिंहासन-मध्यास्य परमानन्दम् अलभत।

राजपुत्त्रस्तु वयस्यगणान् प्रति समुत्सुकः कालिन्दीदत्तं क्षुत्पिपासादिक्लेशहरं मणिं साहाय्यकरणतोषितात् मातङ्गात् समवाप्य कञ्चन पन्थानम् अनुवर्त्तमानं तं विसृज्य तेनैव बिलपथेन निर्ययौ। तत्र च मित्रगणम् अप्राप्य भुवं क्रमेण भ्रमन् कस्यचिन्महतो ग्रामस्य उपशल्ये आक्रीड़मेकम् आसाद्य विश्रामाय तत्र प्रविश्य आन्दोलिकारूढ़ं रमणीसहितम्

आप्तजनपरिवृतं कमपि पुरुषम् अपश्यत्। सोऽपि राजपुत्रं दृष्ट्वा आनन्दविह्वलः "मम एष स्वामी सोमकुलावतंसो राजवाहनः महाभाग्यतया सहसा मे दर्शनपथं गतः" इत्यभिधाय आन्दोलिकाया अवतीर्य्य सत्वरम् उपेत्य प्रणनाम। राजवाहनश्च प्रत्यभिज्ञाय "कथं स एष मे वयस्यः सोमदत्तः!!" इति व्याहरन् गाढ़म् आलिलिङ्ग। ततः कस्यचित् पुन्नागतरोः प्रच्छायशीतले तले समुपविश्य सप्रणयम् अभाषत,—"सखे! कालम् एतावन्तं कथं तिष्ठसि? तरुणी चेयं का? कश्च अयं परिजनः?" इति। सोऽपि आनन्दमुकुलिताक्षः सविनयं स्ववृत्तान्तम् आख्यातुम् उपचक्रमे।

इति द्वितीयोच्छ्वासः।

---

## अथ तृतीयोच्छ्वासः।

---

## सोमदत्तचरितम्।

"देव! भवच्चरणदर्शनार्थी अहं भ्रमन् कस्यामपि वनभूमौ पिपासाकुलः लतावेष्टितं शीतलं नदसलिलं पिबन् समुज्ज्वलं रत्नमेकम् आसादयम्। आदाय च तत् कियन्तमध्वानं गत्वा प्रखरसूर्य्यकिरणासहिष्णुतया गन्तुमक्षमः किमपि देवतायतनं प्राविशम्, अपश्यञ्च तत्र बहुतनयसमेतं वृद्धं भूसुरमेकम्। स तु दैन्यकारणं पृष्टो मया साग्रहम् अवोचत्,—"महाभाग! सुतानेतान् मातृहीनान् अनेकैः उपायैः रक्षन् इह कथञ्चित् भैक्ष्यम् आचर्य्य अस्मिन् शिवमन्दिरे वसामि" इति। "ब्रह्मन्! एतत्कटकाधिपतिः कस्य देशस्य राजा? किन्नामधेयः? कथं

वा अत्रागमनमस्येति कच्चिद्विदितमस्ति?" इति पुनः पृष्टोऽब्रवीत्,—"सौम्य! मत्तकालो नाम लाटेश्वरो देशस्य अस्य पालयितुर्वीरकेतोस्तनयां वामलोचनां नाम तरुणीललामभूतां श्रावं श्रावम् अवधूततत्प्रार्थनस्य पाटलीं नाम नगरीम् अरौत्सीत्। वीरकेतुस्तु भीतो महदुपायनमिव तां कन्यां तस्मै प्रादात्। स च तरुणीलाभसन्तुष्टः 'परिणेया निजपुरे एव' इति निश्चित्य गच्छन् निजदेशे मृगयाऽऽदरेण वनेऽस्मिन् शिबिरम् अकल्पयत्। कन्याऽपसारणार्थं नियुक्तो मानपालो नाम वीरकेतुमन्त्री चतुरङ्गबलसमन्वितः स्वप्रभोः अवमानखिन्नमानसोऽन्यत्र रचितशिबिरः तमन्तर्बिभेद" इति।

तदाकर्ण्य 'विप्रोऽसौ बहुतनयः विद्वान् दरिद्रः स्थविरश्च दानयोग्यः' इति तस्मै सकरुणं तत् रत्नं दत्त्वा अध्वश्रमात् तत्रैकदेशे निद्राम् अलभे। ब्राह्मणश्च असौ कुत्रचित् जगाम। क्षणेन च पश्चान्निगडितबाहुयुगलः स विप्रः कशाहतगात्रः बहुनिस्त्रिंशधारिपुरुषैः अनुगम्यमानोऽभ्येत्य मां 'दस्युः' इति अदर्शयत्। ते च तं परित्यज्य मदुक्तं रत्नावाप्तिप्रकारमनाकर्ण्य मां गाढं नियम्य रज्जुभिः आनीय कारावासम् 'एते तव सखायः' इति निगडितान् कांश्चित् निर्दिशन्तो माम् अपि निगडितचरणम् अकार्षुः। तान् कारावासिनः उद्दिश्य मयोक्तं,—"ननु पुरुषाः वीर्यवन्तः! कथं निर्विशथ कारावासदुःखम्? यूयं वयस्या इति निर्दिष्टमेतैः किम्?" इति। ते च माम् अवेत्य चौरवीराः अवोचन्,—"महाभाग! वीरकेतुमन्त्रिणो मानपालस्य किङ्करा वयं तदाज्ञया लाटेश्वरनिधनाय रात्रौ सुरङ्गाद्वारेण तदागारं प्रविश्य तत्र राजाभावेन विषण्णा बहुधनम् अपहृत्य महाटवीं प्राविशाम। अपरेद्युश्च अन्वेषिणो राजानुचरा बहवोऽभ्येत्य धृतधनचयान् अस्मान् परितः परिवृत्य

दृढं बद्ध्वा निकटम् आनीय समस्तवस्तुप्रत्यर्पणेऽपि एकस्य अमूल्यरत्नस्य अभावेन अस्मद्वधाय इत्थम् अशृङ्खलयन्” इति।

अथ अहं रत्नलाभवृत्तान्तं ब्राह्मणाय तद्दानं तेन च आत्मनो दुरवस्थां नाम धाम भ्रमणकारणञ्च सर्वं तेभ्यः सम्भाष्य तैः मैत्रीम् अकार्षम्। ततोऽर्द्धरात्रे तेषां मम च शृङ्खलबन्धनं निर्भिद्य तैः अनुगम्यमानो निद्रितस्य द्वाःस्थ-गणस्य अस्त्रजालम् आदाय पुररक्षकान् पुरतोऽभिमुखागतान् पराक्रमेण अभिद्राव्य मानपालशिविरं प्राविशम्। मानपालो निजकिङ्करेभ्यः मम वृत्तान्तं तात्कालिकविक्रमञ्च निशम्य मामार्चयत्।

अन्येद्युः मत्तकालेन प्रेषिताः कतिपये मानपालम् उपेत्य अवोचन्,—“मन्त्रिन्! मदीयराजमन्दिरे सुरङ्गया बहु-धनम् अपहृत्य चौरा भवत्कटकं प्राविशन्। तान् अर्पय, नो चेत् महान् अनर्थः सम्भविष्यति” इति। तदाकर्ण्य कोपारुण-नयनो मानपालः “लाटपतिः कः?” इति तान् निरभर्त्स-यत्। तदनु ते प्रत्येत्य मत्तकालाय सर्वम् अकथयन्। स च कुपितो भुजवीर्य्यदर्पेण अल्पसैन्यसमेत एव योद्धुम् अभ्य-गात्। पूर्वमेव कृतरणनिश्चयो मानी मानपालः सन्नद्धयोधो निःशङ्कं निरगात्। अहमपि सबहुमानं मन्त्रिदत्तातिबहुल-तुरङ्गमोपेतं चतुरसारथिं रथं दृढतरं कवचम् अनुरूपं चापं विविधबाणपूर्णं तूणद्वयम् अन्यानि च विविधानि आयुधानि गृहीत्वा युद्धसन्नद्धो मन्त्रिणम् अन्वगाम्। इत्थं प्रवृत्ते शस्त्र-सम्पाते अरातीन् अवलीलया प्रहरन् मत्तकालम् अभ्येत्य निशितशरेण तच्छिरःकर्त्तनम् अकार्षम्। तस्मिंश्च निपतिते पलायितेषु शेषसैनिकेषु मन्त्री मम अनेकसंविधां सम्भावनाम् अकार्षीत्।

अथ मानपालप्रेषितात् तदनुचरात् सर्वम् उदन्तजातम् आकर्ण्य राजा परमप्रीतमनाः समभ्यागतो मत्पराक्रमेण विस्मयमानः समहोत्सवम् अमात्यबान्धवानुमत्या शुभेऽहनि निजतनयां मह्यमदात्। ततो यौवराज्याभिषिक्तोऽहम् अनुदिनं राजानम् अनुरञ्जयन् भवद्विरहवेदनाकुलमानसः सिद्धादेशेन सुहृज्जनावलोकनफलं प्रदेशं महाकालनिवासिनः शङ्करस्य आराधनाय अद्य कान्तासमेतः समागतोऽस्मि। भक्तवत्सलस्य अस्य देवस्य प्रसादेन भवच्चरणारविन्दसन्दर्शन-सुखम् अद्य लब्धम्" इति।

तदाकर्ण्य अभिनन्दिततत्पराक्रमः राजवाहनस्तस्य निरपराधक्लेशप्रदं दैवम् उपालभ्य तस्मै क्रमेण आत्मवृत्तान्तम् अकथयत्। अस्मिन्नेवावसरे सहसा पुरतः समुपस्थितं पुष्पोद्भवं विलोक्य तं कृताञ्जलिं गाढम् आलिङ्ग्य "सोमदत्त! अयं स मे पुष्पोद्भवः" इति सानन्दं तं दर्शयामास। तौ च चिर-विरहदुःखं विहाय अन्योऽन्यालिङ्गनसुखम् अन्वभूताम्। ततः तस्यैव तरोश्छायायाम् उपविश्य राजपुत्त्रोऽब्रवीत्,—"वयस्य! भूसुरकार्य्यं चिकीर्षुरहं 'मित्रगणो विदितार्थः सर्वथाऽन्तरायं करिष्यति' इति निद्रितान् भवतः परित्यज्य निरगाम्। तदनु प्रबुद्धो वयस्यवर्गः किमिति निश्चित्य मदन्वेषणाय कुत्र गतवान्? भवांश्च एकाकी क्व गतः?" इति। सोऽपि कृताञ्जलिः सविनयम् अवादीत्।—

इति तृतीयोच्छ्वासः।

—

## अथ चतुर्थोच्छ्वासः ।

### पुष्पोद्भवचरितम् ।

"देव ! देवेन गन्तव्यं देशं निर्णेतुम् अशक्नुवाने मित्रगणे देवान्वेषणाय इतस्ततः प्रद्रुते अहमपि तदेककर्मा महीमटन् कदाचित् प्रखरसौरकिरणोत्तापितशिराः कस्यचित् गिरितट-रुहस्य तरोः प्रच्छायशीतले तले क्षणम् उपाविशम्। सहसा मध्याह्नसमये मत्पुरतः मानुषच्छायां निरीक्ष्य उन्मुखः पतन्तं कमपि पुरुषम् अम्बरतलात् अन्तराल एव सञ्जातदयोऽव-लम्ब्य शनैः अवनीतले स्थापयित्वा दूरापातवीतसंज्ञं तं शिशिरोपचारेण विबोध्य शोकावेगविगलद्बाष्पं कारणम् अपृच्छम्। सोऽपि कराभ्याम् अश्रूणि प्रमृज्य अभाषत,— "सौम्य ! मगधेश्वरामात्यस्य पद्मोद्भवस्य आत्मजो रत्नोद्भवो नाम अहं वाणिज्येन कालयवनद्वीपम् उपेत्य तत्र कामपि वणिक्-तनयां परिणीय तया सह प्रत्यागच्छन् अम्बुधौ तीरस्य अनतिदूर एव प्रवहणस्य भग्नतया सर्वेषु निमग्नेषु कथमपि दैवानुकूल्येन तीरम् अवाप्य कान्ताविरहदुःखार्णवे प्लवमानः कस्यापि सिद्धतापसस्यादेशात् षोड़शवत्सरान् कथञ्चित् नीत्वा दुरवस्थापारमनवेक्षमाणो गिरिपतनम् अकार्षम्" इति।

अस्मिन्नेव अवसरे किमपि नारीकूजितम् अश्रावि,—"न खलु समुचितमिदं यत् सिद्धादिष्टे पतितनयमिलने विरहा-सहिष्णुतया अग्निप्रवेशः" इति। तदाकर्ण्य मनोविदित-जनकभावं तम् अवादिषं,—"तात ! भवते विज्ञापनीयानि बहूनि सन्ति। भवतु, पश्चात् तत् सम्भवति, अधुना नारी-कूजितम् अनुपेक्षणीयं, तत् क्षणमात्रम् अत्र भवता स्थीयताम्" इति। तदनु सोऽहं त्वरया किञ्चित् अन्तरं गत्वा पुरतो

ज्वलदग्निप्रवेशोद्यतां कामपि वनिताम् अवलोक्य ससम्भ्रमम् अनलात् अपनीय कूजन्त्या वृद्धया सह मत्पितुरन्तिकम् अभिगमय्य स्थविराम् अब्रवं,—"वृद्धे! भवत्यौ कुतस्त्ये? कथमत्र कान्तारे? केन निमित्तेन दुरवस्था अनुभूयते?" इति। सा सगद्गदम् अवादीत्,—"पुत्त्र! कालयवनद्वीपे कालगुप्तनाम्नो वणिजः कन्या एषा सुवृत्ता नाम रत्नोद्भवेन निजकान्तेन आगच्छन्ती जलधौ भग्ने प्रवहणे निजधात्र्या मया सह फलकमेकम् अवलम्ब्य दैवयोगेन कूलमुत्तीर्णा आसन्नप्रसववेदना कस्याञ्चित् अटव्यां सुतमसूत। मम तु मन्दभाग्यतया बाले वनमातङ्गेन गृहीते मदेकाश्रया परिभ्रमन्ती 'षोड़शवर्षानन्तरं भर्त्तृपुत्त्रसङ्गमो भविता' इति सिद्धवाक्यप्रत्ययात् एकस्मिन् पुण्याश्रमे तावन्तं समयं नीत्वा शोकमपारं सोढुमक्षमा साम्प्रतं समुज्ज्वलिते हुताशने शरीरमाहुतीकर्त्तुम् उद्यता" इति। तदाकर्ण्य स्वां जननीं ज्ञात्वा दण्डवत् प्रणम्य तस्यै मद्वृत्तान्तम् अखिलम् आख्याय धात्रीभाषणफुल्लवदनं विस्मयविकसिताक्षं जनकम् अदर्शयम्। पितरौ तु साभिज्ञानम् अन्योऽन्यं विदित्वा मुदितान्तरात्मानौ विनीतं माम् आनन्दवाष्पेण अभिषिच्य गाढ़म् आश्लिष्य शिरसि उपाघ्राय कस्याञ्चिन्महीरुहच्छायायाम् उपाविशताम्। "कथं वर्त्तते महीपतिः राजहंसः?" इति पित्रा पृष्टोऽहं तस्य राज्यच्युतिं त्वदीयजननं सकलकुमारावाप्तिं तव दिग्विजयारम्भं मातङ्गानुसरणम् अस्माकं युष्मदन्वेषणकारणं सर्वमानुपूर्व्येण अभ्यधाम्। ततस्तौ कस्यचिन्मुनेराश्रमे संरक्ष्य देवान्वेषणपरः वित्तमेव अखिलकार्य्यनिमित्तं निश्चित्य कस्यचित् सिद्धस्य अनुकम्पया लब्धसिद्धाञ्जनः विन्ध्याटवीमध्ये पुरातनपत्तनस्थानानि उपेत्य विविधनिधिसूचकानां महीरुहाणाम् अधोनिक्षिप्तान् बहुसुवर्णान् कलशान् ज्ञात्वा खनित्रे-

कृत्स्वाय दीनारान् असङ्ख्यान् सङ्गृह्य तत्कालागतम् अनतिदूरस्थितं वणिक्कटकं गत्वा ततो बलिनो बलीवर्दान् गोणीश्च क्रीत्वा द्रव्यान्तरमिषेण सर्वं वसु तद्गोणीसंस्थितं कृत्वा तैश्च बलीवर्दैरुह्यमानं कृत्वा तत्कटकाधिकारिणम् अगच्छम्। क्रमेण च तेन चन्द्रपालनाम्ना वणिक्तनयेन सञ्जातसौहृदः साकम् अमुनैव उज्जयिनीमगाम्। पितरौ तदनु तां पुरीं नीत्वा सकलगुणनिलयेन बन्धुपालनाम्ना चन्द्रपालपित्रा नीयमानो मालवनाथदर्शनं विधाय तदनुमत्या गूढ़वसतिम् अकार्षम्। ततः काननेषु भवदन्वेषणोद्युक्तं मां परममित्रं बन्धुपालो निशम्य अवदत्,—"मित्र! अखिलां धरित्रीमन्वेष्टुमक्षमो भवान् साम्प्रतं निरुद्वेगेन अत्र तिष्ठतु, भवत्प्रभोरवलोकनाय शुभशकुनं निरीक्ष्य पश्चात् कथयिष्यामि" इति। अहञ्च तद्वचनम् अनुसरन् तदन्तिक एव अतिष्ठम्।

कदाचित् बालचन्द्रिकां नाम कामपि वणिक्कन्यां नयनचन्द्रिकां निरीक्ष्य तल्लावण्यमुग्धचित्तः मदनशरशरव्यतामयासिषम्। साऽपि माम् अवलोक्य मदवस्थामिव नीता मकरकेतनेन। अहन्तु तस्याः सुखसङ्गमोपायं चिन्तयन् परेद्युः बन्धुपालेन शकुनैः भवद्गतिं प्रेक्षिष्यमाणेन सह पुरःप्रान्तविहारवनम् उपेत्य शकुनवचनानि शृण्वन् स्थितः। तत्र च तामेव मत्प्राणेश्वरीं दीनवदनां बालचन्द्रिकामागतां वीक्ष्य तदीयमुखारविन्दे विषादं मदनावेशजनितं विभाव्य तदन्तिकमेत्य अवादिषं,—"सुन्दरि! कथं ते मुखारविन्दे दैन्यलक्षणम्?" सा रहसि सञ्जातविश्रम्भतया विहाय लज्जाभये शनैः अवादीत्,—"महाभाग! मानसारो मालवाधीशो वार्द्धक्यात् निजनन्दनं दर्पसारम् उज्जयिन्याम् अभ्यषिञ्चत्। स च सप्तसागरपरिखां महीं पालयिष्यन् निजपैतृष्वस्रीयौ चण्डवर्मदारुवर्माणौ

राज्यरक्षणे नियुज्य तपश्चरितुं कैलासगिरिम् अगमत्। राज्यं सर्वमसपत्नं शासति चण्डवर्मणि दारुवर्मा मातुलाग्रजन्मनोः शासनमतिक्रम्य दुर्वृत्तपरो मन्मथसदृशस्य भवतो लावण्या-यत्तचित्तां माम् एकदा विलोक्य बलात्कर्त्तुम् उद्युङ्क्ते स्म ; तच्चिन्तया मे दैन्यम्" इति ।

अहन्तु तस्या मय्यासक्तिं तदन्तरायञ्च तं निशम्य ताम् अश्रुमुखीम् आश्वास्य प्रावोचं,—"प्रिये ! भवदभिलाषिणं दुरात्मानम् एनं निहन्तुं सुदुरयम् उपायश्चिन्त्यते, यथा,—'यक्षः कश्चिदधिष्ठाय बालचन्द्रिकां निवसति। यः कश्चित् साहसिकः सम्बन्धयोग्यः तं यक्षं रतिमन्दिरे निर्जित्य तया एकसखीसमेतया मृगाक्ष्या संलापसुखम् अनुभूय कुशली निर्गच्छेत् तेन सा विवाह्येति सिद्धेनैकेन उक्तम्' इति युष्मद्-बान्धवैः पुरजनस्य पुरतः पुनः पुनः कथनीयम्। तदनु दारुवर्मा तं प्रवादम् आकर्ण्य यदि भिया निवर्त्तते तदा भद्रं, यदि च भुजवीर्य्यदर्पेण तथा अङ्गीकरिष्यति तदा युष्मत्परिजनैः इत्थं वाच्यं,—'महाभाग ! दर्पसारनृपामात्यस्य तव अस्मिन् क्षुद्रे निवासे साहसकरणम् अनुचितम्। पौरजनसमक्षं स्वमन्दिरं नीतया अनया सह क्रीड़न् यदि कुशली स्याः, तदा परिणीय एनां मनोरथान् निर्विश' इति। स यदि तथा अङ्गीकुर्य्यात् तदा त्वं सखीवेषधारिणा मया सह तस्य मन्दिरं गच्छ, ततो मया निर्जने तस्मिन् निकेतने मुष्टिजानु-पादाघातैः तं तरसा निहत्य पुनरपि तेनैव वेशेन भवतीं निःशङ्कं स्वगृहं नेष्यामि। त्वञ्च विगतभयलज्जा मातापितृ-सोदराणां पुरतः आवयोः प्रेमातिशयम् आख्याय सर्वथा मत्-परिणयाय तान् अनुनयेः। तेऽपि कुलसम्पन्नावयवशालिने यूने मह्यं त्वाम् अवश्यं दास्यन्ति। त्वया एवं तेभ्यः आख्याय

दारुवर्मणो मरणोपायं तेषामुत्तरं मह्यम् आवेदनीयम्" इति।

सा च किञ्चिदुत्फुल्लवदना "सुभग! त्वयोक्तं सर्वम् आचरिष्यामि" इति कथयित्वा माम् असकृत् विह्वलवदना विलोकयन्ती मन्दमन्दमागारम् अगात्। अहमपि शकुनज्ञबन्धुपालात् 'त्रिंशद्दिनानन्तरमेव भवत्सङ्गः सम्भविता' इत्यशृणवम्। अत्रान्तरे दारुवर्मणा रिरंसुना रतिमन्दिरे समाहूता बालचन्द्रिका तं गमिष्यति इति दूतिकां मत्समीपम् अभिप्रेषितवती। अहमपि सखीवेशम् आस्थाय तया वल्लभया सह तदागारम् अगच्छम्। नगरप्रचारितां यक्षकथां परीक्षमाणो नागरजनोऽपि दारुवर्मणः प्रतीहारभूमिमागमत्। विवेकशून्यमतिरसौ रागातिरेकेण रत्नपर्य्यङ्के तरुणीं नीत्वा तस्यै मह्यञ्च मनोरमस्त्रीवेशाय सकर्पूरताम्बूलादिकं दत्त्वा मुहूर्त्तद्वयं हास्यकौतुकैः संलपन् अतिष्ठत्। ततो यदा रागान्धः सुमुख्या आलिङ्गने मतिम् अकरोत्, तदा अहं रोषारुणाक्षः पर्य्यङ्कतलात् निःशङ्क एनं निपात्य मुष्टिजानुपादप्रहारैः न्यहनम्। ततो भयकम्पितां कान्तां समाश्वास्य मन्दिराङ्गणमुपेतः साध्वसकम्पित इव उच्चैः अकूजं,—'हा! बालचन्द्रिकाऽधिष्ठितेन घोरेण यक्षेण दारुवर्मा सहसा निहन्यते, समागत्य पश्यत' इति। तदाकर्ण्य मिलिता जनाः "हा! किमेतत्!! बालचन्द्रिकाम् अधिष्ठितं यक्षं जानन्नपि दारुवर्मा रागान्धः कथं ताम् अकामयत? तदसौ स्वेनैव कर्मणा निहतः, किं तस्यानुशोचनेन?" इति वदन्तः प्राविशन्। तस्मिंश्च तुमुले कोलाहले तया सह नैपुण्येन सहसा निर्गतो निजाऽऽवासमगाम्। ततो गतेषु कतिपयेषु दिवसेषु पौरजनसमक्षं तां विवाह्य यथाऽभिलषितं सुखम् अन्वभवम्, अभूवञ्च बन्धुपालशकुन-

निर्दिष्टे दिवसेऽस्मिन् पुराद्बहिः वर्त्तमानो भवच्चरणारविन्द-दर्शनसुखभाजनम्।"

एवं मित्रवृत्तान्तं निशम्य प्रफुल्लवदनो राजसूनुः स्वस्य सोमदत्तस्य च वृत्तमस्मै समाख्याय सोमदत्तं "महाकालेश्वरा-राधनानन्तरं भवद्वल्लभां स्वं निकेतनं प्रापय्य आगच्छ" इति समादिश्य पुष्पोद्भवेन सह अवन्तिपुरम् प्रविशत्। तत्र "अयं मम स्वामिकुमारः" इति बन्धुपालप्रमुखाय बन्धुजनाय कथयित्वा तेन सादरं बहुविधां सपर्य्यां कारयन् "सकलकला-कुशलो द्विजवर एषः" इति प्रख्यापयन् पुष्पोद्भवः स्वमन्दिरे एनं पर्य्यचरत्।

इति चतुर्थोच्छ्वासः।

---

## अथ पञ्चमोच्छ्वासः।

## राजवाहनचरितम्।

एकदा वसन्तोदाररमणीये काले अवन्तिसुन्दरी नाम मानसारनन्दिनी वयस्यया बालचन्द्रिकया सह नगरोपान्ते रम्योद्याने पौरविलासिनीजनपरिवृता मनोभवम् अर्चयितुम् अगात्। तत्र रतिमिव अवन्तिसुन्दरीं दिदृक्षुः काम इव वसन्तसहायः पुष्पोद्भवानुचरो राजवाहनः समाजगाम। सा तु अवन्तिसुन्दरी तं क्रमेण अन्तिकम् आयान्तं स्वेनैव आराध्यमानं वाञ्छितप्रदानार्थम् आविर्भूतं मूर्त्तिमन्तम् अनङ्ग-मिव समालोक्य मन्दमारुताऽऽन्दोलिता लतेव मदनाऽऽवेशवती चकम्पे, तस्मै च तत्समक्षं लज्जमाना सखीजनान्तरिता

अपाङ्गवीक्षणेन तम् अवलोकयन्ती। बालचन्द्रिका तु तयोः अन्योऽन्यरागवृत्तिम् अनुभवन्ती 'कान्तासमाजसन्निधौ राजनन्दनोदन्तं सम्यगाख्यातुम् अयुक्तम्' इति लोकसाधारणैः वचनैः अभाषत,—"भर्त्तृदारिके! अयं सकलकलानिपुणो देवतासान्निध्यकरण आहवनिपुणो द्विजकुमारो मणिमन्त्रौषधचतुरः परिचरणीयो भवत्या" इति। तदाकर्ण्य सा अभिनन्दिततद्वचना जितमारं कुमारं समुचितासनासीनं कृत्वा सखीहस्तेन गन्धमाल्यादिना समुपाचरत्।

राजवाहनोऽचिन्तयत्,—"नूनमेषा पूर्वजन्मनि मे जाया यज्ञवती, नो चेत् कथमेतस्याम् एवंविधोऽनुरागो मे वर्त्तते? शापावसानसमये तपोनिधिदत्तं जातिस्मरत्वम् आवयोः समानं, तत् यावत् विशिष्टसूचकैर्वाक्यैः अस्याः स्मरणमुत्पादयामि।" तस्मिन्नेव समये कोऽपि राजहंसः केलिविधित्सया तदुपकण्ठमगमत्। समुत्सुकया राजनन्दिन्या मरालग्रहणे नियुक्तां बालचन्द्रिकामालोक्य 'समुचितो वचनावसर एषः' इति राजवाहनः सविलासमलपत्,—"सखि! पुरा शाम्बो नाम कश्चित् नृपतिः कान्तया सह विहारार्थं सरोवरमेत्य तत्र निद्राधीनं राजहंसं शनैर्गृहीत्वा बिसगुणेन तस्य चरणयुगलं निगडयित्वा कान्तामुखं विलोकयन् मन्दस्मितम् अवादीत्,—'प्रिये! मया बद्धो मरालः शान्तो मुनिरिव वर्त्तते। तत् स्वेच्छया अनेन गम्यताम्' इति। तथोक्ते स राजहंसः शाम्बम् अशपत्,—'राजन्! यदस्मिन् पद्मे अनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं माम् अकारणं राजगर्वेण अवमानितवानसि, तदेतेन पातकेन रमणीविरहसन्तापम् अनुभव' इति। शाम्बस्तु घोरमशनिपातमिव जीवितेश्वरीविरहमसहिष्णुर्भूतलनिहितशिरास्तं सविनयम् अभाषत,—'भगवन्! अज्ञानतया मया

कृतमेतत् क्षमस्व’ इति। स तु करुणार्द्रचेताः प्रावोचत्,—‘राजन्। जन्मनि अस्मिन् मा ते शापफलभोगोऽस्तु, मद्वचनस्य अमोघतया भाविनि जनने देहान्तरं गताया अस्या रसेन रमणो भूत्वा मुहूर्त्तद्वयं मच्चरणयुगलबन्धनेन मासद्वयं शृङ्खलनिगड़ितचरणो रमणीवियोगविषादम् अनुभूय तदनु दीर्घकालं कान्तया अनया सह राज्यसुखमवाप्स्यसि’ इति। ततश्च स भृशमनुनीतस्तयोः जातिस्मरत्वमपि अन्वग्रहीत्। तस्मात् मरालबन्धनं त्वया न करणीयम्” इति।

साऽपि राजबाला तद्वचनाकर्णनाभिज्ञातस्वपुरातनजननवृत्तान्ता ‘नूनमयं मत्प्राणनाथः’ इति मनसा जानती रागफुल्लमानसा ससन्देहा समभाषत,—“सौम्य! पुरा शाम्बो यक्षवतीसन्देशपरिपालनाय तथाविधं हंसं बबन्ध, तथा हि लोके विद्वांसोऽपि दाक्षिण्येन अकार्य्यं कुर्वन्ति” इति।

कन्याकुमारी इत्थम् अन्योऽन्यपुरातनजनननामधेये परस्परज्ञानाय साभिज्ञानमुक्त्वा मनोजरागाविष्टचेतसौ भृशम् आनन्दमन्वभूताम्। तस्मिन्नेवावसरे मालवेन्द्रमहिषी सपरिजना दुहितुः केलिदिदृक्षया तमुद्देशमाजगाम। बालचन्द्रिका तामवलोक्य रहस्यनिर्भेदभिया हस्तसंज्ञया पुष्पोद्भवसेव्यमानं राजवाहनं वृक्षवाटिकाऽन्तरितम् अकार्षीत्। सा तु राजमहिषी क्षणं दुहितुः क्रीड़ाकौतुकमालोक्य निजाऽऽगारगमनाय समुद्यता अभवत्। राजकुमारी कथमपि मातरमनुगच्छन्ती “राजहंसकुलतिलक! केलिवाञ्छया मदन्तिकमायातं भवन्तमकाण्ड एव समुत्सृज्य नोचितमपि जनन्यनुगमनं क्रियते, तदनेन भवन्मनो मा अन्यथा भूत्” इति मरालमिव कुमारमुद्दिश्य समुचितमालपन्ती पुनः पुनः परिवृत्तानना दीननयना स्वमन्दिरमयासीत्। तत्र हृदयवल्लभकथाप्रसङ्गे बालचन्द्रि-

कथया कथिततदन्वयनामधेया मन्मथशरविद्धमानसा विरह-वेदनया दिने दिने बहुलपक्षशशिकला इव क्षामक्षामा आहारादिसर्वव्यापारवर्जिता रहस्यमन्दिरे मलयजरसक्षालित-पल्लवकुसुम-कल्पिततल्पमालाऽऽयत्तदेहा तस्थौ। वयस्यागणास्तां तदवस्थामालोक्य नितान्तविषण्णः काञ्चनकलससञ्चितानि हरिचन्दनोशीरघनसारमिलितानि सलिलानि बिसतन्तुमयानि वासांसि नलिनीदलतालवृन्तानि च सन्तापहराणि सर्वाणि समाहृत्य ताम् असेवत। तच्च शीतलोपचरणं सलिलमिव तप्ततैले तदङ्गे दहनमिव समन्तादाविश्चकार। किंकर्त्तव्यता-विमूढ़ां विवशां बालचन्द्रिकाम् ईषदुन्मीलितेन कटाक्षवीचि-तेन वाष्पाकुलेन विलोक्य नताङ्गी सगद्गदमभाषि,—"सखि! पञ्चशरः कुसुमायुध इत्यलीकमुच्यते, अहन्तु अनेन अयोमयैः असङ्ख्यैः इषुभिर्हन्ये। चन्द्रमसं बड़वानलात् अधिकसन्तापकरं मन्ये, यदस्मिन् चन्द्रमसि अन्तः प्रविशति शुष्यति समुद्रः, सति निर्गते एव वर्द्धते; नास्य दुष्कार्य्यं किमपि, यदनेन सहोदरायाः पद्मालयायाः आश्रयभूतमपि कमलं ताड्यते। विरहानल-सन्तप्तहृदयस्पर्शेन नूनम् उष्णीकृतः खल्वायते मलयपवनः। नवपल्लवकल्पितं तल्पमिदम् अनङ्गाग्निशिखापटलमिव सन्तापं तनोति तनोः, हरिचन्दनम् अपि पुरा निजयष्टिसंश्लेषवत् उरगरदनलिप्तोल्बणगरलसङ्कलितमिव तापयति शरीरम्। तदलम् आयासेन वः, अत्र तावत् राजकुमार एव भिषक्, सोऽपि अलभ्य एव, किं करोमि?" इति। बालचन्द्रिका तादृशीं तामवलोक्य समचिन्तयत्,—"अत्र तावत् कुमारः सत्वरमाने-तव्यो मया, नो चेदेनां स्मरणीयां गतिं नेष्यति मदनः। कुमार-योश्च तस्मिन्नुद्याने अन्योऽन्यावलोकनवेलायामसमसायकः समं मुक्तसायक एव, तस्मात् कुमारानयनं सुकरमेव।"

इत्यवधार्य्य सा सखीगणं राजबालाया रक्षणे नियुज्य राजसूनोरन्तिकमगमत् । सोऽपि प्राणवल्लभामुद्दिश्य पुष्पोद्भवेन सह तत्सङ्गमोपायं तर्कयन् आगतां तां सखीमालोक्य सन्तुष्टमनाः "इतो निषीद" इति निर्दिष्टासनोपवेशिताम् अवन्तिसुन्दरीप्रेषितं सकर्पूरं ताम्बूलादिकं विनयेन ददतीं कान्तोदन्तमपृच्छत् । सा सविनयमवादीत्,—"देव ! विहारोद्याने भवदवलोकनादारभ्य मन्मथमथ्यमाना सा पुष्पतल्पादिष्वपि सन्तापशमनमलब्धवती वामनेव उन्नततरुफलमलभ्यत्वदुरःस्थलाऽऽलिङ्गनसुखं लिप्सुः स्वयमेव पत्रिकामालिख्य 'वल्लभायैनामर्पय' इति मां विसृष्टवती । तदत्र देवः प्रमाणम्" इति । राजकुमारः पत्रिकां पपाठ ।—

"सुभग ! कुसुमसुकुमारं जगदनवद्यं निरीक्ष्य ते रूपम् ।
मम मानसमभिलषति त्वं चित्तं कुरु तथा मृदुलम् ॥"

इति पठित्वा सादरमवादीत्,—"सखि ! छायावन्मामनुवर्त्तमानस्य पुष्पोद्भवस्य वल्लभा त्वमेव तस्या मृगाक्ष्या वहिश्चराः प्राणा इव वर्त्तसे, त्वच्चातुर्य्यमस्यां क्रियायां लताया आलवालमिव वर्त्तते । यत्तवाभीष्टं, येन मनोरथः सेत्स्यति, तत् सर्वं करिष्यामि । तया मन्मनसः काठिन्यमाख्यातं, परन्तु यदा अहं तद्दर्शनपथं गतः, तदैव सा अपहृतमन्मानसा स्वं मन्दिरमगात्, तत् कस्य चेतसः काठिन्यं कस्य वा माधुर्य्यं तत् स्वयमेव सा वेत्ति । दुष्करः कन्याऽन्तःपुरप्रवेशः, तदनुरूपमुपायमुद्भाव्य श्वः परश्वो वा प्रियां सङ्गमिष्ये । एवं मद्वृत्तान्तमुक्त्वा यथा शिरीषमृदङ्ग्याः शरीरबाधा न जायेत तथा अविलम्बम् उपायमाचर" इति । सा दूती अपि तस्य एवं सप्रेमवचनं श्रुत्वा प्रीता कन्यापुरमयासीत् ।

राजपुत्त्रोऽपि पुष्पोद्भवेन सह यत्र हृदयवल्लभावलोकनं

जातं तत्रैव विरहवेदनाविनोदनाय प्रतस्थे। तत्र समन्तात् विचरन् क्वचिदपि अवस्थातुमशक्नुवन् कामपि चतुरवेषं मुण्डितशिरसं द्विजमवालोकयत्, अपृच्छच्च आशिषा संवर्द्धयन्तं,—"को भवान् ? कस्यां विद्यायां निपुणः ?" इति। सः "विद्येश्वरनामाऽहमैन्द्रजालिकविद्याकोविदो नानादेशेषु राजन्यान् तोषयन् उज्जयिनीमद्याऽऽगतः" इत्यभिधाय राजपुत्रं सम्यगालोक्य "अस्मिन् लीलोद्याने किमिति भवतः पाण्डुरता-निमित्तम्" इति पप्रच्छ। पुष्पोद्भवस्तस्य चातुर्यं स्वकार्य्योपयोगि तर्कयन् सादरं तमुवाच,—"ननु ब्रह्मन् ! सख्यस्याभाषण-पूर्वतया भवान् अस्माकं वयस्यो जातः, वयस्यसन्निधौ न खलु किमपि अवाच्यम्। अस्मिन् केलिवने वसन्तमहोत्सवा-ऽऽगताया मालवेन्द्रनन्दिन्या अस्य राजपुत्रस्य चाकस्मिक-दर्शनेन अन्योऽन्यानुरागातिशयः सञ्जातः। तस्याश्च सङ्गमोपाय-विरहेण असौ ईदृशीमवस्थाम् अनुभवति" इति।

विद्येश्वरो लज्जाऽवनतवदनं राजवाहनमालोक्य सस्मित-मभाषत,—"राजनन्दन ! अनुचरे मयि विद्यमाने भवतः किमसाध्यमस्ति ? अहमिन्द्रजालविद्यया मालवेन्द्रं मोहयन् पौरजनसमक्षमेव तत्तनयापरिणयं सम्पाद्य कन्याऽन्तःपुरं प्रवेशयिष्यामि, वृत्तान्तश्चैषः राजबालायै सखीमुखेन पूर्वमेव सन्देष्टव्यः" इति। राजपुत्रः प्रीतात्मा तमकृत्रिममित्रं विद्येश्वरं सबहुमानं विसृज्य फलितमिवाऽऽत्मनो मनोरथं मन्यमानः स्वमन्दिरं सख्या सहोपेत्य बालचन्द्रिकामुखेन प्रियायै विद्येश्वरकरिष्यमाणं सङ्गमोपायं वेदयित्वा कौतुका-कृष्टचेताः कथञ्चिदपि क्षपां क्षपितवान्।

परेद्युः प्रभाते विद्येश्वरो गीतिनीतिचतुरः महता परि-जनेन सह राजभवनद्वारमुपेत्य दौवारिकेण स्ववृत्तान्तं निवेद्य

त्वद्दर्शनकुतूहलाऽऽविष्टेन सावरोधेन मालवनाथेन समाहूतः कक्षान्तरं प्रविश्य सविनयमाशिषं प्रयुज्य राजानुमत्या परिजन-वाद्यमानेषु वादित्रेषु गायकीषु सुस्वरं गायन्तीषु पिच्छिकां भ्रामयन् मुकुलितनयनः क्षणमस्थात्। अनन्तरं विषमं विषमुद्वमन्तः फणावन्तः शिरोरत्नराजिभिस्तमुद्देशमुद्भासयन्तो विचरन्ति स्म। गृध्राश्च बहवः तुण्डैस्तान् क्षणेनाहीन्द्रान् आदाय अन्तरीक्षमलञ्चक्रुः। ततो द्विजवरः नरसिंहस्य हिरण्य-कशिपोर्विदारणमभिनीय राजानं महदाश्चर्यान्वितं कृत्वा अभाषत,—"राजन्! उपसंहारे भवता किञ्चित् शुभशकुनं द्रष्टव्यं, तत् कल्याणावाप्तये भवदात्मजाकृतेः कस्या अपि तरुण्याः सर्वगुणालङ्कृतेन केनचिद्राजकुमारेण परिणयः सम्पाद-नीयः, तत् यदि अभ्यनुज्ञा स्यात् तदा दर्शयामि" इति। अथ तथेति अनुमोदितः सः सर्वजनमोहनमञ्जनं चक्षुषोर्निक्षिप्य समन्तात् व्यलोकयत्। सर्वेषु तत् 'ऐन्द्रजालिकमेव' इति पश्यत्सु साद्भुतं रागफुल्लहृदयेन राजवाहनेन पूर्वसङ्केतसमागतामनेक-भूषणभूषिताङ्गीमवन्तिसुन्दरीं वैवाहिकमन्त्रतन्त्रनैपुण्येनाग्निं प्रज्वाल्य साक्षीकृत्य च समयोजयत्। तदनु "सर्वे ऐन्द्रजालिकाः स्वस्थानं व्रजन्तु" इति द्विजेनाभिहिते सर्वे ते मायापुरुषा यथा-यथमन्तर्हिताः। राजवाहनश्च यथासुखं कन्याऽन्तःपुरमविशत्। मालवपतिस्तु तदद्भुतं मन्यमानस्तस्मै द्विजन्मने प्रभूतं धनं दत्त्वा विसृज्य स्वं मन्दिरमाविवेश। एवं दैवमानुषबलेन मनोरथ-साफल्यमुपेतो रहसि कान्तया सुरतसुखमुपभुञ्जन् दिने दिने चतुर्दशभुवनवृत्तान्तवर्णनेन प्रियां रञ्जयामास।

इति पञ्चमोच्छ्वासः।

पूर्वपीठिका समाप्ता।

---

# अथ उत्तरपीठिकायां

## प्रथमोच्छ्वासः ।

कदाचित् सुरतखेदसुप्ताभ्यां ताभ्यां स्वप्ने बिसगुणनिगडितपादो हंसः कश्चिददृश्यत, अबुध्येताञ्चोभौ। अथ तस्य राजपुत्रस्य रजतशृङ्खलानिगडितं चरणयुगलमालोक्य 'किमेतत्!' इति परित्रासाकुला राजबाला उच्चैश्चक्रन्द, येन तत् सकलमेव कन्याऽन्तःपुरमग्निपरीतमिव पिशाचोपहतमिव वेपमानं किंकर्त्तव्यविमूढम् अगण्यमानरहस्यरक्षासमयम् अवनितलाऽऽहन्यमानगात्रम् आक्रन्दविदीर्य्यमाणकण्ठमश्रुप्लुतकपोलम् आकुलीबभूव। तुमुले चास्मिन् समये अबाधितप्रवेशाः "किं किम् ?" इति सहसोपसृत्य विविशुरन्तःपुरचारिणः पुरुषाः; ददृशुश्च तदवस्थं राजकुमारम्। तत्प्रभावनिरुद्धनिग्रहसामर्थ्यास्तु ते सद्य एव तमर्थं चण्डवर्मणे निवेदयामासुः। सोऽपि कोपादागत्य निर्दहन्निव दहनगर्भया दृशा निशाम्य जातप्रत्यभिज्ञः "कथं स एवैषः मदनुजमरणनिमित्तभूतायाः पापायाः बालचन्द्रिकायाः पत्युर्धनगर्वितस्य वैदेशिकवणिक्पुत्रस्य पुष्पोद्भवस्य मित्रं रूपाभिमानी कलाकोविदः नैकविधविप्रलम्भोपायपाटवाऽऽवर्जित-मूढपौरजनाध्यारोपितवितथदेवताऽनुभवः कपटधार्मिकः निगूढपापशीलश्चपलो ब्राह्मणब्रुवः!! कथमिवैनमनुरक्ता मादृशेष्वपि पुरुषसिंहेषु सावमाना पापेयमवन्तिसुन्दरी!! पश्यतु पतिमद्यैव शूलाधिरूढमनार्य्यशीला कुलपांसनी" इति निर्भर्त्सयन् भीषणभ्रुकुटिदूषितललाटः काल इव काललोहदण्डकर्कशेन बाहुदण्डेनावलम्ब्य हस्ताम्बुजे रेखाऽम्बुजरथाङ्गलाञ्छने राजपुत्रं सरभसमाचकर्ष। स तु स्वभावधीरः सहिष्णुतैकप्रतिक्रियां दैवीमिव तामापदमवधार्य्य "स्मर

तस्या हंसगामिनि! हंसकथायाः, सहस्व वासु! मासद्वयम्" इति प्राणत्यागरागिणीं प्राणसमां समाश्वास्य रिपुवश्यतामगात्।

अथ विदितवार्त्तावार्त्तौ महादेवीमालवेन्द्रौ जामातरमाकारपक्षपातिनौ प्राणत्यागोपन्यासेन भर्त्तुणा जिघांस्यमानं ररक्षतुः; न तु शेकतुस्तमप्रभुत्वादुत्तारयितुमापदः। स किल चण्डशीलः चण्डवर्मा सर्वंसुदन्तजातं राजराजगिरौ तपस्यते दर्पसाराय सन्दिश्य सर्वमेव पुष्पोद्भवपरिजनं सर्वस्वहरणपूर्वकं सद्य एव बन्धने निक्षिप्य हत्वा च राजपुत्रं मृगराजशावकमिव दारुपञ्जरनिबद्धम् अवधूतदुहितृप्रार्थनस्य अङ्गराजस्य उन्मूलनाय अङ्गानभियास्यन् अनन्यविश्वासात् निनाय, रुरोध च बलसरदत्तकम्पयम्पाम्। चम्पेश्वरोऽपि सिंहवर्मा सिंह इवासह्यविक्रमः प्राकारं भित्त्वा महता बलसमुदायेन निर्गत्य स्वप्रहितदूतगणाहूतानां साहाय्यदानाय अतिसत्वरमापततां राज्ञामचिरभाविन्यपि सन्निधावदत्तापेक्षः साक्षादिवावलेपो वपुष्मान् प्रतिबलमाचक्राम; जगृहे च महति सम्प्रहारे अतिमानुषप्राणबलेन चण्डवर्मणा। स च तद्दुहितर्य्यम्बालिकायामतिमात्राभिलाषः प्राणैरेनं न व्ययूयुजत्, परमनोनयत् बन्धनगृहम्; अजीगणच्च गणकैः "अद्यैव निशान्ते राजबाला विवाह्या" इति।

इत्थं गते च तस्मिन् कुबेराचलात् प्रतिनिवृत्य एणजङ्घो नाम कश्चित् दूतः प्रभोर्दर्पसारस्य प्रतिसन्देशमावेदयत्,—"रे मूढ़! किमस्ति कन्याऽन्तःपुरदूषकेऽपि कश्चित् कृपाऽवसरः? स्थविरः स राजा जराविमूढ़चित्तो दुहितृपक्षपातो यदेव किञ्चित् प्रलपति, त्वयाऽपि किं तदनुमत्या स्थातव्यम्? अविलम्बितमेव तस्य कामोन्मत्तस्य चित्रबधवार्त्ताप्रेषणेनास्माकं श्रोत्रोत्सवो विधेयः, सा च दुष्टकन्या सहानुजेन कीर्त्ति-

सारेण निगडितचरणा कारायां निरोद्धव्या" इति। तदाकर्ण्य "प्रातरेव राजभवनद्वारे तं कुमारीपुरदूषकं स्थापय, अहं कृत-विवाहश्च समुत्थाय चण्डपोतेन मातङ्गपतिना तं विनाश्य तदधिरूढ एव शत्रुसाहाय्याय प्रत्यासीदतो राजन्यान् प्रति-ग्रहीष्यामि" इति समादिदेश पार्श्वचरान्।

अथ प्रत्यूष एव राजद्वारानीतस्य राजवाहनस्याङ्घ्रियुगल-ममुच्यत रजतशृङ्खलया। सा च काचिदप्सरोरूपिणी भूत्वा प्राञ्जलिर्व्यजिज्ञपत्,—"देव! कुरु कृपां मयि, अहमस्मि सोमरश्मिसम्भवा सुरतमञ्जरी नाम सुरसुन्दरी। एकदा मे नभसि नलिनलुब्धमुग्धकलहंसानुबद्धवक्त्रायास्तन्निवारणक्षोभ-विच्छिन्नविगलिता हारयष्टिर्हैमवते सरसि मन्दोदके मग्नो-न्मग्नस्य महर्षेर्मार्कण्डेयस्य मस्तके समपतत्। पातितश्च कोऽपि तेन कोपितेन मयि शापः,—'पापे! भजस्व लोह-जातिमजातचैतन्या सती' इति। स पुनः प्रसाद्यमानस्त्वत्-पादपद्मद्वयस्य मासद्वयमात्रं सन्दानतामेत्य निस्तरणीया-मिमामापदम् अपरिक्षीणशक्तित्वञ्चेन्द्रियाणामकल्पयत्। तथा-भूताञ्च मां कदाचित् ऐक्ष्वाकस्य राज्ञो वेगवतः पौत्रः पुत्रो मानसवेगस्य वीरशेखरो नाम विद्याधरः शङ्करगिरौ समभ्य-गमत्। अथासौ पितृप्रयुक्ते वैरे वर्त्तमाने विद्याधरचक्र-वर्त्तिनि नरवाहनदत्ते निराशस्तदपकारक्षमोऽयमिति तपस्यता दर्पसारेण समसृज्यत, प्रतिश्रुतञ्च तेनास्मै स्वसुरवन्ति-सुन्दर्या दानम्।

एकदा मनोरथप्रियामवन्तिसुन्दरीं दिदृक्षुरसौ काम-परवशस्तत्कुमारीपुरमुपेत्यान्तरितस्तिरस्करिण्या विद्यया तां त्वदङ्कोपाश्रयां सुरतखेदखिन्नगात्रीं ददर्श। स तु कुपितो-ऽपि त्वदनुभावप्रतिबद्धनिग्रहाध्यवसायः पाण्डुलोहशृङ्खल-

मथ्यां मया तव पादपद्मयुगलं निगड़यित्वा सकोपमपासरत् । अवसितश्च समाद्य शापः, प्रसीद, किमिदानीं तव करणीयम् ?" इति प्रणिपतन्तीं तां स राजपुत्त्रः "वार्त्तया अनया मत्प्राणसमां समाश्वासय" इति व्यादिश्य व्यसर्जयत् ।

अस्मिन्नेव क्षणे "हतो हतश्चण्डवर्मा केनचित् दुष्करकर्मकारिणा तस्करेणैकेनैव नखरप्रहारेण, राजमन्दिरोद्देशञ्च भवशतमयम् आपादयन्नचकितगतिरसौ विहरति" इति वाचः समुदचरन् । तदाकर्ण्य राजवाहनस्तमेव मत्तहस्तिनमधिरुह्य सवेगं राजभवनमुपेत्य गम्भीरेण स्वरेण समभ्यधात्,—"कः स महापुरुषः, येनैतत् मानुषमात्रदुष्करं महत् कर्मानुष्ठितम् ? आगच्छतु, स मया सह इमं मत्तहस्तिनमारोहतु । अभयमेव मदुपकण्ठवर्त्तिनो देवदानवैरपि विगृह्यमाणस्य" इति । निशम्यैतत् सञ्जातहर्षं तं पुमांसं कृताञ्जलिम् आरोहन्तं कुञ्जराधिपं निर्वर्ण्य हर्षोत्फुल्लदृष्टिः "अहो ! प्रियवयस्यो मे अपहारवर्मा !!" इति पश्चान्निषीदतोऽस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशितमग्रेऽवलम्ब्य स्वमङ्गमालिङ्गयामास, पर्य्यवेष्टयच्च स्वयं पृष्ठतः चालिताभ्यां बाहुभ्याम् ।

अनन्तरञ्चापहारवर्मा विविधप्रहरणजातमुपयुञ्जानः प्रतिबलवीरान् बहुप्रकारयोधिनः क्षितौ विचिक्षेप, ददर्श च क्षणेन तदपि सैन्यमन्येन समन्ततोऽभिमुखमभिधावता सैन्यनिचयेन परिक्षिप्तम् । ततश्च कश्चित् परमसौम्याकृतिरिषुवर्षेण रिपुकुलमभिवर्षन् प्रजविना गजेन सन्निकृष्य पूर्वपरिचयदानप्रत्ययात् 'अयमेव स देवो राजवाहनः' इति प्रणम्यापहारवर्मणि निविष्टदृष्टिराचष्ट,—"वयस्य ! त्वदादिष्टेन मार्गेण उपस्थापितमेतदङ्गराजसाहाय्यदानायोपस्थितं राजन्यकम्, अरिबलञ्च विहतविध्वस्तं स्त्रीबालहार्य्यशस्त्रं वर्त्तते, किम्

अन्यत् करणीयम् ?” इति । हृष्टस्तु व्याजहारापहारवर्मा,—“देव ! दृष्टिदानेनानुगृह्यतामयमाज्ञाकरः । सोऽयमप्यहमेवामुना रूपेण धनमित्राख्यया चान्तरितो मन्तव्यः । स एवाद्य निर्गमय्य बन्धनादङ्गराजम् अस्मत्पक्षीयेण अमुना च राजन्यकेन सह एकान्ते सुखोपविष्टं देवमुपतिष्ठतु यदि न दोषः” इति । देवोऽपि “यथा ते रोचते” इति तमाभाष्य क्वचित् गङ्गातरङ्गपवनशीतले महीरुहतले द्विरदादवतीर्य्य प्रथमसमवतीर्णेनापहारवर्मणा स्वहस्तसत्वरसमीकृते भागीरथीपुलिनदेशे सुखं निषसाद । तथा निषसञ्च तमुपहारवर्माऽर्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुतैर्मैथिलेन च प्रहारवर्मणा काशीभर्त्रा च कामपालेन चम्पेश्वरेण सिंहवर्मणा च सह समुपेत्य धनमित्रः प्रणिपपात । सोऽपि सहर्षमभ्युत्थितः “कथं समस्त एवैषः मित्रगणः समागतः!! को नामाऽयमभ्युदयः” इति कृतयथोचितोपचारान् गाढं परिरेभे; काशीपतिमैथिलाङ्गराजांश्च सुहृन्निवेदितान् पितृवदपश्यत्, तैश्च हर्षकम्पितपलितं सवेगमुपगूढः परमभ्यनन्दत् । ततः प्रवृत्तासु प्रीतिसङ्कथासु प्रियवयस्यगणानुयुक्तः स्वस्य सोमदत्तपुष्पोद्भवयोश्च चरितमनुवर्ण्य सुहृदां वृत्तान्तं क्रमेण श्रोतुं कृतप्रसङ्गस्तान् अपृच्छत् । तेषु प्रथममाह स्म किलापहारवर्मा ।

इति उत्तरपीठिकायां प्रथमोच्छ्वासः ।

---

## अथ द्वितीयोच्छ्वासः।

## अपहारवर्मचरितम्।

"देव! त्वयि पातालमवतीर्णे त्वदन्वेषणार्थं सुहृत्सु इतस्ततः प्रस्थितेषु अहमपि प्रस्थितः कदाचित् "अङ्गेषु वहिश्चम्पायाः कश्चित् महामुनिरस्ति" इति लोकवादादवगम्य तस्माद्भवदुद्देशं जिज्ञासुस्तत्समीपमगमम्, अदर्शञ्च कमपि मलिनकान्तिं तापसम्, अप्राक्षञ्च तं "क्वासौ महर्षिः ?" इति।

असौ निःश्वस्य अवादीत्,—"भद्र! आसीदत्र महाप्रभावो मुनिः। एकदा काममञ्जरी नाम अतत्या काचित् वाराङ्गना सनिर्वेदमुपेत्य चरणयोस्तस्य अपतत्। क्षणे च तस्मिन् तस्या मातृप्रभृतय आप्तवर्गाः समुपस्थिताः। स तु मुनिस्तां समाश्वास्य कारणमपृच्छत्। सा सलज्जविषादगौरवमब्रवीत्,—"भगवन्! अहं श्रेयःसाधनाय भवत्पादमूलं प्रपन्ना" इति। तस्यास्तु जननी कृताञ्जलिरभाषत,—"भगवन्! वयं जात्या वेश्याः, अस्याश्च वेश्याया मातुर्मे वेश्योचिताचरणानुशासनमेनां प्रतीपयति। अयञ्चेहगाचारः 'आजन्म परिमितेन धातुसाम्यकृता वर्णरूपमेधाजननेनाहारेण प्रतिपालनं, पञ्चमात् वर्षादारभ्य क्रमेण कामशास्त्रशिक्षणं, नृत्यगीतवाद्यनाट्यादिनानाविधासु विलासकलासु उपदेशः, निखिलव्यापारेषु सामान्यज्ञानं, द्यूतादिक्रीड़ासु नैपुण्यविधानं, विश्वस्तजनात् प्रथमसुरताभ्यासः, उत्सवादिषु सुसज्जितायाः प्रेषणं, सुलक्षणख्यापनं, नागरिकपुरुषेषु रूपशीलचातुर्य्यादिप्रस्तावनं, क्रमेण तरुणजनलक्ष्यीभूतायाः समधिकमूल्येन अवस्थापनं, भावविलासदर्शनेन मत्तात् जनात् छलेन बह्वर्थग्रहणं, निःस्नी-

क्षतानां वहिष्करणम्, अर्थदानाक्षमात् धर्माधिकरणे अभियोगेन अर्थादानम्, इत्थं बहुधा युवजनवञ्चनम्। अस्याश्च युवजनानां विविधेन वाह्यव्यापारेण मनस्तोषणं न तु सङ्गेन, सत्यामपि प्रीतौ मातुः शासनेन तथाऽऽचरणम्' इति।

एवं स्थिते एषा हतभाग्या स्वधर्ममुल्लङ्घ्य क्वचिदागन्तुके रूपमात्रधने विप्रकुमारे स्वेनैव धनेन समासक्ता मासमतिवाहितवती, अर्थवन्तं कमपि नाद्दतवती, अस्माभिरर्थागमविरहेण अवसद्यते। 'एषा कुमतिर्न कल्याणी' इति निवारयन्त्यां मयि वनवासाय कोपात् प्रस्थिता इयं यदि न प्रत्यानीयते तदा सर्व एव स्वकुटुम्बवर्गः अनशनेनात्रैव संस्थास्यते" इत्यरोदीत्।

अथ तां वाराङ्गनां मुनिरब्रवीत्,—"भद्रे! वनवासोऽतिदुःखाकरः, फलमस्य मोक्षः स्वर्गो वा, आद्यस्तु प्रकृष्टज्ञानेन साध्यत्वात् प्रायेण दुःसम्पादनीयः। द्वितीयस्तु सर्वस्यैव स्वधर्मानुष्ठायिनः सुलभः। तदशक्यादारम्भात् विरम्य स्वधर्ममनुसर" इति। "यदि भगवता मे प्रसादो न क्रियते तदाऽहमग्निं प्रवेक्ष्यामि" इतिवादिनीं तां दृष्ट्वा तन्मातरमवदत्,—"सम्प्रति गच्छ गृहं, प्रतीक्षस्व कानिचित् दिनानि, इयं सुकुमाराङ्गी अत्र स्थिता तपःक्लेशमशक्नुवती सोढुमचिरेणैव पुनर्गृहाय यथा प्रतिगमिष्यति तथा प्रबोधप्रदानादिना करिष्यामि" इति।

ततस्तथेति तस्याः प्रतियाते स्वजने सा युवतिस्तमृषिम् अलघुशक्तिर्नात्यादृतशरीरसंस्कारा तरुपोतकालवालपूरणैः देवार्चनकुसुमावचयनैः स्थानसम्मार्जनादिभिश्च शिवपूजार्थं गन्धमाल्यधूपदीपनृत्यगीतादिभिरेकान्ते धर्मार्थकामसम्बन्धिभिरालापैः अल्पेनैव कालेन अन्वरञ्जयत्।

एकदा तं मुनिं रक्तं विलोक्य सा सस्मितमवादीत्,—"मूढो-ऽयं लोकः, यः सह धर्मेण अर्थकामौ गणयति" इति। मुनि-रवोचत्,—"वत्से! कथय केनांशेन अर्थकामातिशायी धर्मस्तव विदितः?" इति। सा सलज्जमभाषत,—"ब्रह्मन्! अस्मात् किल जनात् भगवतस्त्रिवर्गबलाबलज्ञानं नैव सम्भवति, अथ वैष: अनु-ग्रहप्रकारो दास्याः; तत् श्रूयतां—'धर्मो हि अर्थकामयोः प्रभवः, स तु तदनपेक्ष एव, अर्थः कामश्च धर्मेण बाध्यते, स तु तत्त्वदर्श-नोपबृंहितः कथञ्चित् सञ्जाताभ्यामाभ्यां न बाध्यते, बाधितो-ऽपि अल्पायासेनैव प्रतिसमाधीयते। तथा हि भवानीपतेः मुनिपत्नीसहस्रसन्दूषणेन, पितामहस्य तिलोत्तमाऽभिलाषेण, विष्णोः व्रजाङ्गनाविहारेण, प्रजापतेः स्वदुहितरि प्रणयेन, देव-राजस्य गुरुदाराभिगमनेन, चन्द्रमसो गुरुपत्नीहरणेन, सूर्य्यस्य वड़वालङ्घनेन, अनिलस्य अञ्जनागमनेन, बृहस्पतेर्ज्येष्ठभार्य्या-ऽभिसरणेन, पराशरस्य योजनगन्धागमनेन, व्यासस्य भ्रातृदार-सङ्गत्या, अत्रेर्मृगीसमागमेन च समुत्पन्नं धर्मपीड़नमचिरेण एवाग्निपतितमिन्धनमिव दह्यते। देवानाञ्च तेषु तेषु कार्य्येषु असुरविप्रलम्भनानि ज्ञानप्रभावान्न धर्मं पीड़यन्ति' तत् मन्ये धर्मो नार्थकामयोः समानः, प्रत्युत तदतिशायी" इति।

श्रुत्वैतदृषिरुद्दीप्तरागोऽब्रवीत्,—"अयि विलासिनि! साधूक्तं त्वया—'तत्त्वदर्शिषु अधर्मो न स्थानमाप्नोति' इति। परमाजन्मनः अर्थकामयोरनभिज्ञा वयम्; तदाचक्ष्व किं-स्वरूपावेतौ? किं-फलौ? किं-परिवारौ? कथं वा ज्ञेयौ?" इति। साऽवोचत्, —"ब्रह्मन्! अर्थस्तावदर्जनवर्द्धनरक्षणात्मकः, कृषिपाशु-पाल्यवाणिज्यसन्धिविग्रहादिपरिवारः, तीर्थप्रतिपादनफलश्च। कामश्च विषयातिसक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्श-विशेषः, परिवारस्त्वस्य यावदिह रम्यमुज्ज्वलञ्च, फलं पुनः

परमाह्लादनं परस्परविमर्दजन्म। एतदर्थमेव जनाः कष्टानि तपांसि महान्ति दानानि युद्धानि समुद्रलङ्घनादीनि समाचरन्ति"इति।

निशम्यैतत् स मुनिः स्वनियममनादृत्य तस्यां प्रासजत्। सा तु अतिप्रमत्तं तं प्रवहणेनारोप्य राजमार्गेण स्वभवनमनैषीत्, अघोषयच्च 'श्वः कामोत्सवः' इति। परेद्युश्च तं मुनिं कामिजनवत् सुसज्जितं नितान्तरक्तम् उत्सवसमाजं नीत्वा युवतिशतवृतस्य राज्ञः पुरतः समुपतस्थे। तेन च हसता "भगवता सह निषीद"इति समादिष्टा सविभ्रमकृतप्रणामा निषसाद। तत्र काचित् युवतिरुत्थाय कृताञ्जलिरभाषत,—"देव! जिताऽहमनया, अद्य प्रभृति अस्या दासी संवृत्ताऽस्मि" इति राजानं प्रणनाम। अभूच्च सविस्मयं महान् कोलाहलः। ततश्च हृष्टेन राज्ञा सत्कृता सा वाराङ्गनाभिः पौरैश्च प्रशस्यमाना तमृषिमभाषत,—"भगवन्! अयमञ्जलिः, चिरमनुगृहीतोऽयं दासजनः, स्वार्थं इदानीमनुष्ठेयः" इति। स तु नितरामनुरक्तोऽशनिहत इवोद्भ्राम्याब्रवीत्,—"प्रिये! किमेतत्? कुतस्ते एतादृगौदासीन्यम्? क्व गतस्ते मय्यनुरागः?" इति। सा सस्मितमवोचत्,—"ब्रह्मन्! ययाऽद्य राजसमीपे मत्तः पराजयोऽभ्युपेतः, तस्या मम च क्वचित् सङ्घर्षे 'मरीचिम् आवर्जितवतीव श्लाघसे' इति तया साधिक्षेपमुक्ताऽस्मि, दास्यपणबन्धनेनास्मिन्नर्थे प्रावर्त्तिषि, सिद्धार्था चास्मि भवत्प्रसादात्"इति।

इत्थमवधूतस्तया स मुनिः कृतानुशयः शून्यवत् न्यवर्त्तिष्ट। यस्तयैवं हृतः, तमेव मां मन्यस्व। अचिरादेव त्वदर्थसाधनक्षमो भवितुं यते, अस्यामेव पुर्य्यां तावत् वस"इति।

अस्मिन्नेवान्तरे रविरस्तमगात्। कृतसन्ध्योपासनश्च तं मुनिमनुमान्य तत्रैव कथञ्चिन्नीतरात्रिः प्रभाते नगराय

मदाश्रमस्थो वानप्रस्थाश्रमाश्रयणाय समुत्सुकः सर्वथा भवद्भिर्न निवारणीयः। अत्र स्थितस्त्वयं भगवद्भक्तिम् उपलप्स्यते। भवन्तश्च पितृसन्निधौ न सुखम् अवाप्स्यन्ति" (४०) इति। महर्षेः आज्ञाम् अधिगम्य ते पितुर्वानप्रस्थाश्रमाधिगमप्रतिषेधाग्रहम् अत्यजन्। राजवाहनं पुष्पपुर्य्यामवस्थाप्य तदनुज्ञया सर्वेऽपि परिजनाः स्वानि स्वानि राज्यानि प्रतिपाल्य स्वेच्छया पित्रोः समीपे गतागतम् अकुर्वन्। एवम् अवस्थितास्ते राजवाहनप्रमुखाः सर्वेऽपि कुमाराः राजहंसाज्ञया सर्वमपि वसुधावलयं (४१) न्यायेन परिपालयन्तः परस्परम् ऐकमत्येन वर्त्तमानाः पुरन्दरप्रभृतिभिः (४२) अपि अतिदुर्लभानि राज्यसुखानि अन्वभूवन्।

इति श्रीदण्डिना कृतौ दशकुमारचरिते विश्रुत-
चरितं नाम अष्टम उच्छ्वासः।

इति श्रीदण्डिना कृता दशकुमारचरितस्य
उत्तरपीठिका समाप्ता।

---

(४०) अवाप्स्यन्ति प्राप्स्यन्ति, पराधीनत्वादिति भावः।

(४१) वसुधावलयं पृथिवीमण्डलम्।

(४२) ऐकमत्येन एकमतावलम्बनेन। पुरन्दरप्रभृतिभिः इन्द्रादिभिः।

इति अष्टमोच्छ्वासटीका।

इति बि, ए, उपाधिधारिणा पण्डितकुलपतिना श्रीजीवानन्दविद्यासागर-
भट्टाचार्य्येण विरचिता छात्रबोधिनी व्याख्या।

---

रामकटोरा ब्रु. न. का. नेपाल

